

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## SHIKSHA -10

Bk. Demian 2000

ॐ

॥ जयतु भारतम् - जयतु भारती ॥

# संस्कृत भारती

## पत्रालयद्वारा संस्कृतम्

***Samskrit Through Correspondence***

"Aksharam" 8th Cross, II Phase, Girinagar,
Bangalore-560 085. Ph.: 6721052

Serial No. ______

## शिक्षा

॥ उत्तिष्ठत, जाग्रत, प्राप्य वरान्निबोधत ॥

**Arise, awake, stop not till the goal is reached.**

### दशमः पाठः

### १. कृदन्ताः

**गीतोपदेशः**

१) कुरुक्षेत्रे एकस्मिन् भागे एकादशाक्षौहिणीसेना स्थितवती ।

२) अपरस्मिन् भागे सप्ताक्षौहिणीसेना योद्धुं सज्जीभूय[1] स्थितवती[2] ।

३) कौरवाणां सेनापतिः भूत्वा भीष्मः धनुः गृहीत्वा सेनायाः अग्रभागे स्थितवान् ।

४) पाण्डवाः धृष्टद्युम्नं सेनापतिः इति निर्वाच्य[3] तम् अभिषिच्य सेनायाः अग्रभागं [4]प्रापितवन्तः ।

५) श्रीकृष्णः अर्जुनं रथम् आरोप्य[5] रणाङ्गणाभिमुखं[6] प्रस्थितवान्[7] ।

६) अर्जुनः उक्तवान् - ''श्रीकृष्ण ! सेनयोः उभयोः मध्ये मम रथं नीत्वा[8] स्थापय'' इति ।

---

1. Having got ready, 2. stood, 3. having chosen, (they) 4. took, 5. having made him board, 6. towards the battle field, 7. started, 8. having taken

७) श्रीकृष्णः अश्वान् चोदयित्वा[9] शीघ्रमेव रणाङ्गणं प्रविश्य सेनयोः मध्ये रथं स्थगितवान्[10] ।

८) ततः अर्जुनः अग्रे स्थितं पितामहं भीष्मं दृष्टवान्, विद्यागुरुं द्रोणाचार्यम् अवलोकितवान्, मातुलं[11], पितृव्यपुत्रान्, सुहृदः[12], अन्यान् च वीक्षितवान् ।

९) एवं सर्वान् दृष्ट्वा अर्जुनः श्रीकृष्णमुक्तवान् ।

१०) 'श्रीकृष्ण ! मम गात्राणि[13] सीदन्ति[14], शरीरे वेपथुः[15] भवति, गाण्डीवं च हस्तात् पतति, अतः अहम् अत्र स्थातुं[16] समर्थो न ।

११) स्वजनं हत्वा राज्यं, सुखं च अनुभवितुं न इच्छामि ।

१२) पितामहादीन् बान्धवान् नाशयित्वा पापं प्राप्तुं न अभिलषामि ।

१३) अतः महत् पापं कर्तुं व्यवसितः[17] न भवामि ।'

१४) इत्युक्त्वा धनुः विसृज्य मुखम् अधःकृत्वा[18], रथे उपविशन् एव रुदितवान्[19] ।

१५) श्रीकृष्णः उक्तवान् - ''अर्जुन ! कथम् एतादृशं कश्मलम् आगतम् ? क्लैब्यं[20] त्यक्त्वा क्षुद्रं हृदयदौर्बल्यं[21] दूरीकृत्य[22] योद्धुं[23] सज्जो भव[24]'' ।

१६) अर्जुनः पुनः उक्तवान् - ''गुरोः बन्धूनां च हननं[25] कृत्वा सुखम् अनुभवितुं न इच्छामि ।

१७) तदपेक्षया[26] भिक्षया जीवनमेव श्रेयस्करम् । किं करणीयं, किम् अकरणीयम् इति निश्चयं कर्तुम् अहम् इदानीम्[27] असमर्थः ।

---

9. having driven forward, 10. stopped, 11. maternal uncle, 12. friends, 13. limbs, 14. failing, 15. tremor, 16. to stand, 17. (I have) began, 18. put down, 19. wept, 20. cowardice, 21. weakmind, 22. having driven away, 23. to fight, 24. be ready, 25. killing, 26. compared to it, 27. now



१८) त्वं मम श्रेयः यत्, तत् ब्रूहि ।''

१९) एवं सेनयोः मध्ये विलपन्तम् अर्जुनं[28] श्रीकृष्णः उक्तवान् ।

२०) ''त्वं निमित्तमात्रम्,[29] अहमेव पूर्वं सर्वान् हतवान्''[30] इति उपनिषदां सारभूतां भगवद्गीताम्, उपदिष्टवान्[31] ।

## २. पदसङ्ग्रहः

लभ् - to obtain

१. लभते, २. लभ्यते ३. लप्स्यते

४. लब्धव्यम्, लम्भनीयम्, ५. लब्धः - लब्धा - लब्धम्, ६. लब्धवान् - वती, ७. लभमानः - ना, ८. लब्ध्वा - उपलभ्य, ९. लब्धुम् ।

लू - to cut, to divide

१. लुनाति, २. लूयते, ३. लविष्यति,

४. लवितव्यम्, लवनीयम्, ५. लूनः - ना - नम्, ६. लूनवान् - वती, ७. लुनन् - ती, ८. लवित्वा - उल्लूय, ९. लवितुम् ।

वद् - to talk

१. वदति, २. उद्यते, ३. वदिष्यति,

४. वदितव्यम्, वदनीयम् , ५. उदितः - ता - तम्, ६. उदितवान् - वती, ७. वदन् - न्ती, ८. उदित्वा - अनूद्य, ९. वदितुम् ।

वस - to live

१. वसति, २. उष्यते ३. वत्स्यति,

४. वस्तव्यम्, वसनीयम्, ५. उषितः - ता - तम्, ६. उषितवान् -वती, ७. वसन् - न्ती, ८. उषित्वा - न्युष्य, ९. वस्तुम् ।

---

28. lamenting, 29. pretext, 30. (I have) killed, 31. Instructed.

वृध् - to grow, increase

१. वर्धते, २. वर्ध्यते, ३. वर्धिष्यते,

४. वर्धितव्यम्, वर्धनीयम्, ५. वर्धितः - ता - तम्, ६. वर्धितवान् - वती, ७. वर्धमानः - ना, ८. वर्धित्वा - संवर्ध्य, ९. वर्धितुम् ।

## ३. प्रहेलिका - १०

**का कान्ता कालियारातेः पुनरर्थे किमव्ययम् ।**
**किं वन्द्यं सर्वदेवानां फलेषु किमु सुन्दरम् ॥**

Who is the wife of Vishnu the enemy of Kaliya ? Which indeclinable is used in the sense of "again' ? Which is revered by all the Gods ? Which is the nicest among fruits ? Answer in one word.

Answer- मातुलिङ्गम् - A particular kind of fruit.
मा - Lakshmi, तु - again,
लिङ्गम् - the Shivalinga

## ४. सुभाषितम् - १७

**ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो[1]**
**ज्ञानस्योपशमः[2] श्रुतस्य विनयो[3] वित्तस्य पात्रे व्ययः ।**
**[4]अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य[5] निर्व्याजता**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥**

**पदविभागः**

ऐश्वर्यस्य, विभूषणम्, सुजनता, शौर्यस्य, वाक्संयमः, ज्ञानस्य, उपशमः, श्रुतस्य, विनयः, वित्तस्य, पात्रे, व्ययः, अक्रोधः, तपसः,

1. विसर्गसन्धिः (उकारः), 2. गुणसन्धिः, 3. विसर्गसन्धिः (उकारः) 4. विसर्गसन्धिः (सकारः), 5. विसर्गसन्धिः (रेफः)



क्षमा, प्रभवितुः, धर्मस्य, निर्व्याजता, सर्वेषाम्, अपि, सर्वकारणम्, इदम्, शीलम्, परम्, भूषणम् ।

**तात्पर्यम्**

Kindness of spirit adorns wealth. Restraint over speech adorns valour. Wisdom is adorned by detachment to worldly matters. Modesty adorns scholarship. Charity to the deserving adorns wealth. Penance is adorned by absence of anger. Forbearance adorns the capable and lack of pretence adorns religious practices. But character which is the root cause of all these qualities is the greatest ornament.

**अन्वयः**

ऐश्वर्यस्य सुजनता, शौर्यस्य वाक्संयमः, ज्ञानस्य उपशमः, श्रुतस्य विनयः, वित्तस्य पात्रे व्ययः, तपसः अक्रोधः, प्रभवितुः क्षमा, धर्मस्य निर्व्याजता च विभूषणम् । सर्वेषाम् अपि सर्वकारणम् इदं शीलं परं भूषणम् ।

**अन्वयार्थः**

सुजनता - kindness, विभूषणं - is a decoration, ऐश्वर्यस्य - for wealth, वाक्संयमः - controlled speech शौर्यस्य - adorns valour, उपशमः - detachment to wordly things, ज्ञानस्य - adorns wisdom; विनयः - modesty, श्रुतस्य - adorns learning, पात्रे व्ययः - distribution amongst the deserving, वित्तस्य - adorns wealth, अक्रोधः - absence of anger, तपसः - adorns penance, and क्षमा - forbearance, प्रभवितुः - adorns the powerful, सर्वेषाम् अपि - for every body, सर्वकारणम् इदं शीलं - character which is the cause of everything, परं भूषणं - is the greatest ornament.

## सुभाषितम् - १८

**दिनयामिन्यौ सायं प्रातः शिशिरवसन्तौ पुनरायातः ।**
**कालः क्रीडति गच्छत्यायुः[1] तदपि[2] न मुञ्चत्याशावायुः[3] ॥**

1. यण्सन्धिः 2. जश्त्वसन्धिः 3. यण्सन्धिः

**पदविभागः**

दिनयामिन्यौ, सायम्, प्रातः, शिशिरवसन्तौ, पुनः, आयातः, कालः, क्रीडति, गच्छति, आयुः, तत्, अपि, न, मुञ्चति, आशावायुः ।

**तात्पर्यम्**

Day and night, dusk and dawn winter and spring keep coming. Time passes like play. Life is also spent. Inspite of all this the ghost of desire never leaves us.

**अन्वयार्थः**

दिनयामिन्यौ - Day and night, सायं - evening, प्रातः - and morning, शिशिरवसन्तौ - winter and spring, आयातः - come, पुनः - again and again, कालः - Time, क्रीडति - plays, आयुः - life, गच्छति - is spent, तदपि - even then, आशावायुः - the ghost of desire, न मुञ्चति - doesnot leave us.

## ५. काव्यकथा

## किरातार्जुनीयम्

शिवः एकं वनचरं प्रेषितवान् । [1]स आगत्य[a] अर्जुनं निवेदितवान् - ''भवान् राजश्रेष्ठः - इति ममाभिप्रायः[2] । अतः प्रार्थनां करोमि । अस्य वराहस्य शरीरे बाणो[3] लग्नः[b] । सः अस्माकम् अधिपस्य[c] शिवस्य बाणः । भवान् महापुरुषः । भवता [4]शिवबाणस्यापहरणं[d] न कर्तव्यम्'' इति ।

---

1. सः + आगत्य - विसर्गसन्धिः (लोपः),

2. मम + अभिप्रायः -सवर्णदीर्घसन्धिः,

3. बाणः + लग्नः - विसर्गसन्धिः (उकारः) गुणसन्धिः,

4. बाणस्य + अपहरणम् - स.दी.सं.

---

a) having come, b) stuck, c) lord, d) theft



अर्जुनः उक्तवान् - ''शिवस्य बाणः कुत्रापि[5] लीनः[e] स्यात् । अयं ममैव[6] बाणः । शूरस्य मम अन्येषां[f] बाणस्यापेक्षा[7] नास्ति । किञ्च, युगपत्[g] बाणः प्रयुक्तः[h] । अयं शिवस्यैव[8] बाण[9] इति वक्तुं न युक्तिः[i] । अहं वनवासी । वराहं हन्तुं [10]ममाधिकारोऽस्त्येव'' इति ।

वनचरो निवृत्तः[j] । शिवायेदं[11] सर्वमुक्तवान् । किरातरूपः शिवः प्रमथगणं प्रेषितवान् । प्रमथगणः[k] अर्जुनेन सह युद्धमकरोत् । किन्तु पराजितः[l] । अनन्तरं शिवस्य सुतः कार्तिकेयो[m] [12]युद्धायागतवान् । अर्जुनस्तमपि[13] पराजितवान्[n] । ततः स्वयं शिव एव युद्धाय प्रस्थितः[o] ।

किरातार्जुनयोर्मध्ये भीकरं युद्धं प्रवृत्तम् । युद्धं दृष्ट्वा [14]देवाश्चकिताः[p] । किरातोऽतीव[15] युद्धकुशलः । अतस्तं [16]दृष्ट्वार्जुनस्तर्कितवान्[q] ''किरातोऽयं[17] रथसैन्यहीनः । तथापि मम सामर्थ्यं कुण्ठितं[r] करोति । [18]अतोऽयं न किरातः । दिव्यास्त्रैरस्य[19] पराक्रमो निवारणीयः'' इति ।

---

5. कुत्र + अपि - स. दी. सं.
6. मम + एव - वृद्धिसन्धिः,
7. बाणस्य + अपेक्षा - स.दी.सं.
8. शिवस्य + एव - वृ. सं.,
9. बाणः + इति - वि. सं. (लोपः)
10. मम + अधिकारः + अस्ति + एव - स.दी.सं., वि.सं. (उकारः), गुणः, पूर्वरूपसन्धिः, यण्सन्धिः ।
11. शिवाय + इदम् - गुणसन्धिः
12. युद्धाय + आगतवान् - सवर्णदीर्घसन्धिः
13. अर्जुनः + तम् - वि.सं. (सकारः)
14. देवाः + चकिताः - वि.सं., श्चुत्वसन्धिः
15. किरातः + अतीव - वि.सं. (उकारः) गुणः, पूर्वरूपसन्धिः ।
16. दृष्ट्वा + अर्जुनः + तर्कितवान् - स.दी.सं., वि. सं. (सकारः)
17. किरातः + अयम् - वि.सं. (उकारः), गुणसन्धिः, पूर्वरूपसन्धिः ।
18. अतः + अयम् - वि.सं. (उकारः), गुणसन्धिः, पूर्वरूपसन्धिः ।
19. दिव्यास्त्रैः + अस्य - वि.सं. (र)

---

e) hidden, f) others. g) simultaneously, h) shot, i) there is no proof, j) went back, k) a group of goblins, l) was defeated, m) Shanmukha, n) defeated, o) left for, p) astonished, q) reflected (thought), r) reduced,

ततोऽर्जुनः 'प्रस्वापनं' [20]नामास्त्रं विमुक्तवान्[s] । अनेन महादेवः कुपितः । तदा तस्य तृतीयनेत्राज्ज्वालोत्पन्ना[21] । 'प्रस्वापनास्त्रं' विफलञ्जातम्[22] । अर्जुनः नागास्त्रं विमुक्तवान् । तदपि विफलम् । ततः किरातार्जुनयोर्बाहुयुद्धमेवारब्धम्[23] ।

भीकरं बाहुयुद्धम् । युद्धे महान् ध्वनिरुत्पन्नः[24] । उभयोरपि[25] शरीरं रक्तमयं जातम् । युद्धे शिवः उपरि उद्गतवान्[t] । किन्तु अर्जुनस्तस्य पादं गृहीतवान् । इदं दृष्ट्वा शिवः बहु सन्तुष्टः । शिवः किरातवेषं परित्यज्य निजरूपमेव स्वीकृतवान् । अर्जुनः शिवं नमस्कृतवान् । [26]शिवोऽप्यर्जुनम् आलिङ्गितवान्[u] । तदा दिव्यध्वनिरुत्पन्नः । पुष्पवृष्टिश्चाभवत्[27] ।

अर्जुनो वरं प्रार्थितवान् - ''शत्रुवर्गस्य नाशार्थं साधनं देहि'' इति । शिवः सन्तोषेण रहस्ययुतं[v] 'पाशुपतास्त्रं' दत्तवान् । धनुर्वेदमपि शिक्षितवान्[w] । अर्जुनो धनुर्वेदं पठित्वा शिवाय प्रदक्षिणं कृतवान् । इन्द्रादिदेवा अपि अर्जुनायास्त्राणि[28] दत्तवन्तः । शिवस्याज्ञामनुसृत्य[29] अर्जुनो[30] गृहं निवृत्तः ।

---

20. नाम + अस्त्रम् - स.दी.सं.
21. नेत्रात् + ज्वाला + उत्पन्ना - श्चुत्वसन्धिः, गुणसन्धिः
22. विफलं + जातम् - परसवर्णसन्धिः
23. ..अर्जुनयोः + बाहुयुद्धम् - वि. सं. (र)
    .....एव + आरब्धम् - स.दी.सं.
24. ध्वनिः + उत्पन्नः - वि.सं. (र)
25. उभयोः + अपि - वि. सं. (र)
26. शिवः + अपि + अर्जुनम् - वि.सं. (उ), गुणसन्धिः, पूर्वरूपसन्धिः, यण्सन्धिः ।
27. पुष्पवृष्टिः + च + अभवत् - वि.सं. (स), श्चुत्वं, स.दी.सं.
28. अर्जुनाय + अस्त्राणि - स.दी.सं.
29. शिवस्य + आज्ञाम् - स.दी.सं.
30. अर्जुनः + गृहम् - वि.स. (उ), गुणसन्धिः

s) shot (left) t) jumped up, u) embraced. v) secret, w) taught



## ६. अन्वयरचनाक्रमः

**२२. तस्माद्राजेन्द्र ! भूम्यर्थे नानृतं वक्तुमर्हसि ।**
**मा गमः ससुतामात्यो नाशं पुत्रार्थमब्रुवन् ॥**

**पदविभागः**

तस्मात्, राजेन्द्र, भूम्यर्थे, न, अनृतम्, वक्तुम्, अर्हसि, मा, गमः, ससुतामात्यः, नाशम्, पुत्रार्थम्, अब्रुवन् ।

**तात्पर्यम्**

Oh king ! Never tell a lie for the sake of the kingdom (earth). For the sake of your son if you refrain from speaking the truth, (that half of the kingdom must go to the Pandavas) with your children and ministers you will be destroyed.

**अन्वयरचना**

न अर्हसि - you can not

कः ? - त्वम् - कर्तृपदम्
किं कर्तुं न अर्हसि ? - वक्तुम् ।
किं वक्तुम् ? - अनृतम् ।
किमर्थम् अनृतम् ? - भूम्यर्थे ।

मा गमः - do not attain

किं मा गमः ? - नाशम् ।
कः ? - त्वम् ।
कीदृशः त्वम् ? - ससुतामात्यः
पुनः कीदृशः ? - अब्रुवन् ।
किम् अब्रुवन् ? - सत्यम् ।

Write the prose order and word to word meaning of the above verse.

२३. सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥

**पदविभागः**

सर्वैः, गुणैः, उपेताः, तु, पाण्डवाः, भरतर्षभ, पितृवत्, त्वयि, वर्तन्ते, तेषु, वर्तस्व, पुत्रवत् ।

**तात्पर्यम्**

The Pandavas endowed with all virtues look upon you as their father. You too look upon them as your children.

**अन्वयरचना**

वर्तन्ते (they) are
के वर्तन्ते ? - पाण्डवाः - कर्तृपदम्
कीदृशाः पाण्डवाः ? - उपेताः ।
कैः उपेताः ? - गुणैः ।
कीदृशैः गुणैः ? - सर्वैः ।
कथं वर्तन्ते ? - पितृवत् ।
कस्मिन् वर्तन्ते ? - त्वयि ।

भरतर्षभ ! O king !
वर्तस्व - Behave
कथं वर्तस्व ? - पुत्रवत् ।
केषु वर्तस्व ? - तेषु ।

Write the prose-order and word to word meaning of the above verse.

२४. सन्धत्स्व त्वं कौरव ! पाण्डुपुत्रैः
मा तेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव ! सर्वे
दुर्योधनं स्थापय त्वं नरेन्द्रः ॥



**पदविभागः**

सन्धत्स्व, त्वम्, कौरव, पाण्डुपुत्रैः, मा, ते, अन्तरम्, रिपवः, प्रार्थयन्तु, सत्ये, स्थिताः, ते, नरदेव, सर्वे, दुर्योधनम्, स्थापय, त्वम्, नरेन्द्र ।

**तात्पर्यम्**

Dhritarashtra ! enter into a treaty with the Pandavas, Let not your enemies wish to divide you. The Pandavas are truthful. You stop Duryodhana from waging war.

**अन्वयरचना**

कौरव - Oh ! Dhritarashtra of the Kuru race !
नरदेव - Oh king !
सन्धत्स्व - enter into a treaty
कः ? - त्वम् - कर्तृपदम्
कैः सह ? - पाण्डवैः सह
मा प्रार्थयन्तु - Let them not pray for
के ? - रिपवः
कस्य रिपवः ? - ते
किं मा प्रार्थयन्तु ? - अन्तरम् - rift - (object - कर्मपदम्)
स्थिताः - they are
कुत्र स्थिताः ? - सत्ये ।
के सत्ये स्थिताः ? - ते - कर्तृपदम्
कीदृशाः ते ? - सर्वे ।
स्थापय - prevent
कः ? - त्वम् - कर्तृपदम् ।
कं स्थापय ? - दुर्योधनम् - कर्मपदम्

Write the prose order of the above four parts separately and all together-write the word to word meaning also.

२५. राजन् ! भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन् ! स्वेषु पाण्डुसुतेषु वा ॥

**पदविभागः**

समम् + आचर । The rest is easy.

**तात्पर्यम्**

Oh king ! I repeat, If you do not discriminate between your children and the Pandavas, treat them both alike.

**अन्वयरचना**

राजन् ! - Oh king !
ब्रवीमि - I tell (you)
कः ? - अहम् - कर्तृपदम्
कं ब्रवीमि ? - त्वाम्
कथं ब्रवीमि ? - भूयः
आचर - treat
कथम् आचर ? - समम्
केषु आचर ? - पुत्रेषु
कीदृशेषु पुत्रेषु ? - स्वेषु
पुनः केषु ? - पाण्डुसुतेषु
यदि - If
अस्ति - Is
का अस्ति ? - समता
कस्य समता ? - ते ।

Write the prose order and the word to word meaning. With these words Vidura warned Dhritarashtra.



## ७. सन्धयः

In the previous lessons, we have learnt about different kinds of स्वरसन्धिः, व्यञ्जनसन्धिः and विसर्गसन्धिः । All the rules of Sandhis are summarised here in a different way so that you may get an overall idea about the rules.

### स्वरसन्धिः

| | | | | |
|---|---|---|---|---|
| १. | अ/आ | + | अ/आ | = सवर्णदीर्घसन्धिः |
| | इ/ई | + | इ/ई | |
| | उ/ऊ | + | उ/ऊ | |
| | ऋ/ॠ | + | ऋ + ॠ | |
| २. | अ/आ | + | इ/ई, उ/ऊ, ऋ/ॠ, ऌ, = गुणसन्धिः | |
| ३. | अ/आ | + | ए, ऐ, ओ, औ, = वृद्धिसन्धिः | |
| ४. | इ/ई, उ/ऊ ऋ/ॠ, ऌ | + | Any non-similar vowel = यण्सन्धिः | |
| ५. | ए, ओ | + | अ = पूर्वरूपसन्धिः | |
| ६. | ए, ओ | + | Any vowel except अ = यान्तवान्तादेशसन्धिः | |
| | ऐ, औ | + | Any vowel = यान्तवान्तादेशसन्धिः | |

### व्यञ्जनसन्धिः

1. स & तवर्ग (त थ द ध न) + श & चवर्ग (च छ ज झ ञ) or vice-versa = श्चुत्वसन्धिः
2. स & तवर्ग + ष & टवर्ग (ट ठ ड ढ ण) or vice versa = ष्टुत्वसन्धिः
3. वर्गीयव्यञ्जन + स्वर or मृदुव्यञ्जन (soft consonant) = जश्त्वसन्धिः

4. वर्गीयव्यञ्जन + अनुनासिक = अनुनासिकसन्धिः
(Fifth letter of each class)

5. अनुस्वार + Consonant = परसवर्णसन्धिः
(other than श, ष, स, ह)

6. मकार + Consonant = अनुस्वारसन्धिः

7. ङ, ण, न + Vowel = ङमुडागमसन्धिः
(preceded by ह्रस्व)

## विसर्गसन्धिः

| Preceding letter | + विसर्ग + | Followed by | = change in विसर्ग |
|---|---|---|---|
| 1. Short अ | + : + | Short अ or soft consonant | = उत्व (विसर्ग (becomes उ) |
| 2. (i) Short अ | + : + | Any vowel (except short अ) | = लोप (विसर्ग disappears) |
| (ii) आ | + : + | vowel or मृदुव्यञ्जन | = लोप |
| (iii) स, एष | + : + | Any letter ( except short अ) | = लोप |
| 3. Any vowel except short अ | + : + | vowel or soft consonant | = रेफ (र्) |
| 4. Any vowel | + : + | स च छ | = स् |
| ,, | + : + | ष ट ठ | = ष् |
| ,, | + : + | क ख प फ | = No change |

(Note : The case 2(iii) is an exception to the case 4.)



## 8. लौकिकन्यायाः (Popular Maxims)

**बकबन्धप्रयासन्यायः** - There was a pond. In the afternoon two friends spotted a lone crane in the middle of the pond. Somehow they wanted to catch it. One of them suggested that they keep some butter on the head of the bird and when it melted and obscured the sight of the bird they could catch it.

Then the other pointed out that they could catch the bird when they want to keep butter on its head only.

This maxim is quoted when a work is unnecessarily complicated.

**शतपत्रपत्रशतभेदन्यायः** - A needle is easily passed through a hundred lotus petals as they are very soft. Though the needle has pierced all the hundred petals it seems as if it is very fast. Similarly many things though done in an orderly fashion, when accomplished quickly, one wonders how it is completed. Then the above maxin is quoted.

Try to know more about Maxims.



ॐ

# संस्कृत भारती

## पत्रालयद्वारा संस्कृतम्

## Samskrit Through Correspondence

Reg. No. 

## शिक्षा

### दशमः पाठः - प्रश्नाः

1) Translate the following passage into Samskrit.

This is a story from Ramayana. Sri Rama killed Ravana and along with Sita returned to Ayodhya. He was seated in the court. They remembered the battle. They praised Hanuman who had found Sita in Ashokavana. Sita gave a precious necklace to Hanuman. Anjaneya took the necklace. He removed the gems from it and examined them. Then he crushed them between his teeth and threw them away. When he kept throwing them away Sita was surprised. She asked him "why he was doing it ?" Anjaneya replied that he was looking for Rama in the necklace. When he could not see him there he bit the gems and examined. He could not find him even there. He then said that he did not want a thing where Rama is not there so he was throwing them away.

2) Write the अन्वयरचना and substance.

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनः
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥

**NOTE**

Please write the answers in a separate sheet of paper and send it to us.

शि (इं) - X, नवें - ९७, १,०००

Please open 5 minutes
before writing the answer.

ॐ

# SAMSKRITA BHARATI

## Samskrit Through Correspondence

'AKSHARAM', 8th Cross, 2nd Phase, BANGALORE - 85

✆ : 6721052

Reg. No. ........................ Date ............................

Dear Participant,

Sadaram Vandanani.

We hope your studies are in good progress. Please note the following instructions regarding examinations.

1. Date of examination is 25 FEB 2001

2. Fix up any time suitable to your convenience.

   Duration :-

   Pravesha and Parichaya - ~~2.30~~ 3.00 Hrs

   Shiksha and Kovida - 3.00 Hrs

3. Open the cover containing question and answer papers. Write the answers in the allotted time.

4. Send the answer papers to us in a sealed cover the next day itself.

We wish you success in your effort to learn Samskrit.

Thanking you,

Yours Sincerely,

सुब्रह्मण्यम

NOTE : (a) Additional sheets can be used if required.

(b) Opening of the question paper before the date of examination would be treated as MIS-CONDUCT.

1) काकतालीयन्यायः  2) बकबन्धप्रयासन्यायः

XIV. *संस्कृतभाषया अनुवादं कुरुत ।* 5

1. ಶ್ಲೋಕವನ್ನು ಓದುತ್ತಿರುವ ಹುಡುಗಿಯೇ ಗೌರಿ.
   The girl, who is reading the shloka is Gouri.
2. ಓಡುತ್ತಿರುವ ಹುಡುಗನಿಗೆ ಲೇಖನಿಯನ್ನು ಕೊಡು.
   Give the pen to the boy who is running.
3. ಅವರು ಕದಿಯುತ್ತಿರುವ ಕಳ್ಳನನ್ನು ಹಿಡಿದರು.
   They caught the thief who was stealing.
4. ಬರುತ್ತಿರುವ ಆನೆಗಳನ್ನು ನೋಡು.
   See the coming elephants.
5. ಶಿಶುಪಾಲನು ಕೃಷ್ಣನೊಡನೆ ಯುದ್ಧವನ್ನು ಮಾಡಲು ನಿಶ್ಚಯಿಸಿದನು.
   Shishupala decided to fight with Krishna.

XV. *कन्नडभाषया आङ्ग्लभाषया वा अनुवादं कुरुत ।* 5

1. वाल्मीकेः प्रश्नं श्रुत्वा नारदः उक्तवान् ।
2. कश्चिद् यतिवरः उटजे आसीत् ।
3. स्वार्थं लब्धुम् अन्यः न पीडनीयः ।
4. वासवदत्ता पुष्पाणि आदाय मालां ग्रथितवती ।
5. माता महानसे पचमाना अस्ति ।

ψψψψ

MODEL QUESTION PAPER
ಮಾದರಿ ಪ್ರಶ್ನಪತ್ರಿಕೆ

ॐ

# संस्कृतभारती

## पत्रालयद्वारा संस्कृतम्

## शिक्षापरीक्षा

समयः - घण्टात्रयम्  अङ्काः - १००

I. *संस्कृतभाषया* ***पञ्चानां*** *प्रश्नानाम् उत्तराणि लिखत ।* 5

1. रावणः पूर्वजन्मनि कः आसीत् ?
2. श्रीकृष्णः काभ्यां सह मन्त्रालोचनं कृतवान् ?
3. श्रीकृष्णेन सह इन्द्रप्रस्थं के के प्रस्थिताः ?
4. भीष्मः कं पूजार्हम् अकथयत् ?
5. वनचराः इन्द्राय किं निवेदितवन्तः ?
6. अर्जुनः ईश्वरं कं वरं प्रार्थितवान् ?

II. ***एकस्य*** *श्लोकस्य पदविभागम् अन्वयरचनां च कृत्वा, कन्नडभाषया आङ्ग्लभाषया वा तात्पर्यं लिखत ।* 6

1. द्वास्थः प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
   विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ।।
2. यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
   कृतमेवास्य जानन्ति स वै पण्डित उच्यते ।।

III. *सुभाषित****द्वयस्य*** *अन्वयार्थं, तात्पर्यं च कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 8

1. दिनयामिन्यौ सायं प्रातः
   शिशिरवसन्तौ पुनरायातः ।
   कालः क्रीडति गच्छत्यायुः
   तदपि न मुञ्चत्याशावायुः ।।
2. दम्भेन लोभेन भिया ह्रिया वा
   प्रायो विनीतो जन एष सर्वः ।

वैराग्यतस्त्वाहृदयं विनीतं
नरं वरं दुर्लभमेव मन्ये ।।

3. आयत्यां गुणदोषज्ञः तदात्वे क्षिप्रनिश्चयः ।
अतीते कार्यशेषज्ञः विपदा नाभिभूयते ।।

**IV.** *द्वयोः अभिप्रायं कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 4

1. उत्तिष्ठत । जाग्रत । प्राप्य वरान्निबोधत ।
2. अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ।
3. वृत्तेन हि भवत्यार्यो न धनेन न विद्यया ।

**V.** *प्रश्न**द्वयस्य** उत्तरं कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 4

1. एतत् त्रयं जगति पुण्यकृतो लभन्ते । किं तत् त्रयम् ? विवृणुत ।
2. विषममसिधाराव्रतमिदम् । कीदृशं तद् व्रतम् ?
3. आशानद्याः स्वरूपं किम् ?

**VI.** *ससन्दर्भं कन्नडभाषया आङ्ग्लभाषया वा विवृणुत ।* **(चत्वारि)** 12

1. व्याधिः वर्धमानः शत्रुश्च नोपेक्षणीयः ।
2. केवलम् उत्साहो न कार्यसाधकः ।
3. शान्तिं त्यज, शत्रूणां विनाशं कुरु ।
4. दुष्टाः तत्काले सुखमनुभवन्ति । अन्ते नश्यन्ति ।
5. तपसः मध्ये विघ्नाः भवन्त्येव ।
6. मोक्षप्राप्तौ मम इच्छा नास्ति ।

**VII.** *प्रहेलिका**द्वयस्य** अर्थम् उत्तरं च कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 6

1. का कान्ता कालियारातेः पुनरर्थे किमव्ययम् ।
किं वन्द्यं सर्वदेवानाम् फलेषु किमु सुन्दरम् ।।

2. यजमानेन कः स्वर्गहेतुः सम्यग् विधीयते ।
विहायाद्यन्तयोर्वर्णौ गोत्रं कुत्र स्थितं वद ।।

3. अपूर्वोऽयं मया दृष्टः कान्तः कमललोचने ।
शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः ।।

**VIII.** *इतरवचनरूपाणि लिखत ।* 5

1. .......... ......... पठन्ति ।
2. .......... .......... लिखतु ।
3. वदन् .......... .......... ।
4. धावते .......... .......... ।
5. .......... .......... कृतवन्तः ।

**IX.** रेखाङ्कितानां पदानाम् उचितानि रूपाणि लिखत । 5

1. निर्मलस्य आकाशे चन्द्रः शोभते ।
2. सः धावता अश्वात् पतितः ।
3. गानं शृण्वता तया निद्रा कृता ।
4. वनं गच्छन् रामं दृष्ट्वा जनाः दुःखिताः ।
5. लवकुशौ रामायणं गायन् स्तः ।

**X.** *अ) सन्धिं विभज्य सन्धिनाम लिखत ।* 6

1. क्वचिदपि 2. विधिरस्ति 3. तन्नगरम् 4. भगवन्निराः
5. इन्धनम् 6. षण्मुखः

*आ) संयोज्य सन्धिनाम लिखत ।* 6

1. तत् + लयः 2. यत् + भर्तुः 3. सामान्याः + तु
4. बुद्धिः + विद्यासु 5. जगत् + मोहिनी 6. सम्राट् + अस्ति

**XI.** *वाक्यानि रचयत ।* 9

1. नमन् 2. पतन्तम् 3. प्रचलत्
4. रक्षता 5. सह 6. क्रीडन्त्यः
7. याचमानेभ्यः 8. वहन्त्याम् 9. भवान्

**XII.** *पञ्चषैः वाक्यैः संस्कृतभाषया लघुप्रबन्धं लिखत ।* 10

1) श्रीकृष्णस्य मन्त्रालोचनम् । 2) शिवार्जुनयोः युद्धम् ।

**XIII.** एतौ न्यायौ कन्नडभाषया आङ्ग्लभाषया वा विवृणुत । 4

**XV.** *संस्कृतभाषया अनुवादं कुरुत ।* **5**

१. ಅವಳು ನರ್ತಿಸುತ್ತಿರುವ ನವಿಲನ್ನು ನೋಡಿದಳು.
She saw the dancing peacock.

२. ವಿದ್ಯಾರ್ಥಿಗಳು ಮನೆಗೆ ಬಂದು ಪಾಠಗಳನ್ನು ಓದಿದರು.
After coming home students read the lessons.

३. ದೆಹಲೀ ನಗರವು ಯಮುನಾನದಿಯ ದಡದ ಮೇಲಿದೆ.
Delhi is on the bank of river Yamuna.

४. ಓಡುತ್ತಿರುವ ಹುಡುಗಿಯರು ಬಿದ್ದರು.
The running girls fell down.

५. ಹರಿಯುತ್ತಿರುವ ನದಿಯಲ್ಲಿ ಮೀನುಗಳಿವೆ.
There are fishes in the flowing river.



ॐ

**संस्कृतभारती**

**पत्रालयद्वारा संस्कृतम्**

# शिक्षापरीक्षा

समयः - **घण्टात्रयम्** दिनम् - **विक्रम सं ।। फाल्गुनशुक्लद्वितीया**

अङ्काः - **१००** **भानुवासरः, २५.०२.२००१**

**I.** *संस्कृतभाषया **पञ्चानां** प्रश्नानाम् उत्तराणि लिखत ।* **5**

१. कः मुनिवेषं धृत्वा अर्जुनस्य परीक्षां कर्तुम् इच्छति स्म ?
२. शिशुपालस्य शतम् अपराधान् मृष्यामि इति कः प्रतिज्ञावचनं दत्तवान् ?
३. श्रीकृष्णः राजसूययागाय कुत्र गन्तुं निश्चितवान् ?
४. श्रीकृष्णः चक्रायुधेन कं प्राहरत् ?
५. नियमानुसारेण युधिष्ठिरः कैः सहारण्यं गतवान् ?
६. शिवः अर्जुनाय किं दत्तवान् ?

**II.** ***एकस्य** श्लोकस्य पदविभागम् अन्वयरचनां च लिखित्वा, कन्नडभाषया आङ्ग्लभाषया वा तात्पर्यं लिखत ।* **6**

१. अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ।।

२. सञ्जयो विदुर ! प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ।।

**III.** *सुभाषित**द्वयस्य** अन्वयार्थं, तात्पर्यं च कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* **8**

१. शास्त्राण्यधीत्यापि भवन्ति मूर्खाः यस्तु क्रियावान् पुरुषः स विद्वान् ।
सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ।।

२. दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ।।

३. दम्भेन लोभेन भिया ह्रिया वा प्रायो विनीतो जन एष सर्वः ।
वैराग्यतस्त्वाहृदयं विनीतम् नरं वरं दुर्लभमेव मन्ये ।।

(पृ. प. प.)

IV. *द्वयोः अभिप्रायं कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 4

१. सौख्यं कुतः प्राणिनाम् ?

२. धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।

३. मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ।

V. *प्रश्नद्वयस्य उत्तरं कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 4

१. 'तेऽमी मानुषराक्षसाः' के ?

२. विनाग्निना पञ्च दहन्ति कायम् । ते पञ्च के ?

३. विरलः सरलो जनः - कीदृशः जनः विरलः ?

VI. *ससन्दर्भं कन्नडभाषया आङ्ग्लभाषया वा विवृणुत ।* **(चत्वारि)** 12

१. भवान् सर्वं जानाति । सर्वज्ञो हि भवान् ।

२. व्याधिः वर्धमानः शत्रुः च नोपेक्षणीयः ।

३. केवलम् उत्साहः न कार्यसाधकः ।

४. स्त्रीणाम् उपदेशवचनेषु पुरुषाः प्रायेणानादरं प्रकटयन्ति ।

५. फलपर्यन्तं तपस्यामाचर ।

VII. *प्रहेलिकाद्वयस्य अर्थम् उत्तरं च कन्नडभाषया आङ्ग्लभाषया वा लिखत ।* 6

१. पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः
चलते वायुवेगेन पदमेकं न गच्छति ।

२. अपूर्वोऽयं मया दृष्टः कान्तः कमललोचने
शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः ।

३. यजमानेन कः स्वर्गहेतुः सम्यग्विधीयते ।
विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ।।

VIII. *रेखाङ्कितानां पदानाम् उचितानि रूपाणि लिखत ।* 5

१. एकः ग्रामे एकः कृषिकः आसीत् ।

२. लवकुशौ क्रीडन्तः आस्ताम् ।

३. पठन् बालकेषु उत्साहः विद्यते ।

४. फलानि पतत् सन्ति ।

५. याचमानः भिक्षुकेभ्यः सर्वे कुप्यन्ति ।

IX. *इतरवचनरूपाणि लिखत ।* 5

१. .......... .......... पठद्भिः

२. .......... लिखन्त्यौ ..........

३. गच्छत् .......... ..........

४. .......... .......... क्रीडद्भ्यः

५. चरन्तम् .......... ..........

X. *अ) सन्धिं विभज्य सन्धिनाम लिखत ।* 5

आयुर्वर्षशतम्, कन्दुकः, मनश्शान्तिः, वाग्दानम्, प्रत्यङ्ङात्मा

*आ) संयोज्य सन्धिनाम लिखत ।* 5

अप् + मयम्, तत् + चलति, गुणैः + अहम्, एतत् + नगरम्, तपः + चरति

XI. *वाक्यानि रचयत* **(नव)** 9

१. वहन्त्याम् २. निराकृत्य ३. गच्छन्
४. धावन्ती ५. कम्पमानाम् ६. नमते
७. आरब्धवन्तः ८. भवती ९. पठता
१०. निपीय ११. त्यजता

XII. *लौकिकन्यायद्वयं कन्नडभाषया आङ्ग्लभाषया वा विवृणुत ।* 6

१. बकबन्धप्रयासन्यायः । २. काकतालीयन्यायः ।

३. भिक्षुपादप्रसारन्यायः ।

XIII. *पञ्चषैः वाक्यैः संस्कृतभाषया लघुप्रबन्धं लिखत ।* 10

१. व्यासोपदेशः । २. भीमयुधिष्ठिरयोः संवादः ।

XIV. *कन्नडभाषया आङ्ग्लभाषया वा अनुवादं कुरुत ।* 5

१. राज्ये सर्वत्र कृषिः उत्कृष्टास्ति ।

२. सगरपुत्राः भूमिं विदार्य पातालं प्रविष्टवन्तः ।

३. नर्तितुं नटेन पूर्वं सम्यक् अभ्यसितव्यम् ।

४. सिंहः मेघम् अवलोक्य गर्जितवान् ।

५. सः तमसातीरे अटन् क्रौञ्चमिथुनं दृष्टवान् ।

